# संस्कृत-वार्ताः

**दिनाङ्कः - 28-11-2020**

**प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमन्त्री अद्य कोविड-नवदश-सूच्यौषध-निर्माणप्रगतिं समीक्षितुं हैदराबाद-अमहमदाबाद-पुणे नगराणां च यात्रां विधास्यति।
- केन्द्रशासिते जम्मू-कश्मीर-राज्ये अद्य सम्पत्स्यमाणाय जम्मू-कश्मीर-जनपद्-विकास-निर्वाचनाय सर्वाः सज्जताः सन्ति सम्पूरिताः।
- प्रधानमन्त्री नरेन्द्रमोदी ह्यः ब्रिटिशप्रधानमन्त्रिणा बोरिस जॉनसेन सह दूरभाषद्वारा चर्चां अकरोत्। भारतेन-ब्रिटेनदेशेन च सहभागितां वर्धितुम् इच्छाः प्रकटिताः।
- आयुर्विज्ञानमहाविद्यालयाः हिमाचले दिसम्बरमासस्य प्रथमदिवसाद् उद्घटिष्यन्ते।
- भारतं कोरोना इति वैश्वकसंक्रमणं प्रति प्रवर्तमाने युद्धे अनारतं साफल्यम् अधिगच्छति। । प्रत्यावाप्तिमितिः षड् पञ्चदशमलवोत्तर त्रिनवति प्रतिशतं संवृत्ता।

**कोविड आपनिंग**

कोरोणामहामार्याः विरुद्धं देशः ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभिः सह सुरक्षायाः उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

**प्रधानमंत्री-वैक्सीन**

प्रधानमन्त्री अद्य कोविड-नवदश-सूच्यौषध-निर्माणप्रगतिं समीक्षितुं हैदराबाद-अमहमदाबाद-पुणे नगराणां च यात्रां करिष्यति। श्रीमोदी अस्मिन्नवसरे अहमदाबादे औषधनिर्मातृसमूहस्य जाइडस् बायोटेक् भारत-बाइटेक् इत्यनयोः अपि च पुणेनगरे सीरम-इंस्टीट्यूट् ऑफ इण्डिया इत्यस्मिन् सूच्यौषधनिर्माणप्रक्रियां द्रक्ष्यति। प्रधानमन्त्री कार्यालयानुसारि एतादृशे समये यदा देशः कोविड्संक्रमणनिवारणो-पचाराणां प्रयत्नाः अन्तिमे चरणे प्रविष्टाः, प्रधानमन्त्रिणः एषा यात्रा वैज्ञानिकैश्च सह चर्चाः महत्वपूर्णाः भविष्यति। सर्वप्रथमं प्रधानमन्त्री अहमदाबादम् अनन्तरं पुणेनगरं तथा च सर्वान्ते हैदराबादनगरं प्राप्स्यति।

**जम्मू-कश्मीर-चुनाव**

केन्द्रशासिते जम्मू-कश्मीर-राज्ये अद्य सम्पत्स्यमाणाय जम्मू-कश्मीर-जनपद्-विकास-निर्वाचनाय सर्वाः सज्जताः सन्ति सम्पूरिताः। अद्य प्रथमे चरणे जम्मू सम्भागस्य अष्टादश, कश्मीर सम्भागस्य च पञ्चविंशति जनपद्-निर्वाचनक्षेत्रषु निर्वाचनानि अनुष्ठास्यन्ते। राज्यस्य निर्वाचनायुक्तेन के.के. शर्माणा स्पष्टीकृतं यत् एतन्निर्वाचनानि अष्टचरणेषु सम्पत्स्यन्ते।

मोदी-जॉनसन

प्रधानमन्त्री नरेन्द्रमोदी ह्यः ब्रिटिशप्रधानमन्त्रिणा बोरिस जॉनसेन सह दूरभाषद्वारा चर्चां अकरोत्। भारतेन-ब्रिटेनदेशेन च सहभागितां वर्धितुम् इच्छाः प्रकटिताः। उभौ नेतारौ उभयोः देशयोः मध्ये कोविड-नवदशमहामार्याः सूच्यौषधस्य विनिर्माणे उत्पादने च सहयोगस्य अपि चर्चाम् अकुरुताम्।

प्रकाशजावडेकरः

पर्यावरण-वन-जलवायु-परिवर्तन मन्त्री प्रकाश जावडेकरः ह्यः जलवायुपरिवर्तनैः सम्बद्धं जालपुटस्य शुभारम्भं व्यदधात्। अस्मिन् जालपुटे राष्ट्रियेषु अन्ताराष्ट्रियेषु च स्तरेषु सर्वकारद्वारा जलवायुपरिवर्तन-सम्बद्धानां विषयाणामुपरि क्रियमाणानां कार्याणां सूचनाः उपलब्धाः भविष्यन्ति।

हिमाचल-मेडिकल कॉलेज्

आयुर्विज्ञानमहाविद्यालयाः हिमाचले दिसम्बरमासस्य प्रथमदिवसाद् उद्घटिष्यन्ते। इमे कोरोनामहामार्याः कारणात् अष्टमासेभ्यः पिहिताः आसन्। स्वास्थ्यसचिवः अमिताभः अवस्थी प्रावोचद् यद् छात्रैः स्वकीयस्वस्थतायाः प्रमाणपत्रं देयं भविष्यति। तदनन्तरमेव ते कक्ष्यासु भागं ग्रहीतुम् अर्हाः भविष्यन्ति।

प्रधानमन्त्री-मनकीबात

प्रधानमन्त्री नरेन्द्रमोदी आगामि-रविवासरे स्वीये "मन की बात" इति कार्यक्रमे देशवासिभिः साकं विचारविनिमयं करिष्यति। "मन की बात" इति मासिक कार्यक्रमस्य इदं एकसप्ततितमं संस्करणं भविता। अस्य कार्यक्रमस्य प्रसारणं आकाशवाण्याः दूरदर्शनस्य च सर्वाभिः वाहिनीभिः प्रसारयिष्यते।

प्रधानमन्त्रिणः अस्मै कार्यक्रमाय देशवासिनः स्वीय-परामर्शं "नमो" इति चरिष्णुतन्त्रमाध्यमेन MyGOV (माई गॉव) इति अन्तर्जालीयपटलद्वारा अथवा एकम् अष्ट शून्यं शून्यं एकम् एकम् सप्त अष्ट शून्यं शून्यं (1800-11-7800) इति मुक्तदूरभाषसंख्यया अपि प्रेषयितुं शक्यन्ते इति।

कोविड-अपडेट

भारतं कोरोना इति वैश्वकसंक्रमणं प्रति प्रवर्तमाने युद्धे अनारतं साफल्यम् अधिगच्छति। अनवरतं ऊनविंश-दिवसं प्रत्यह्नि पंचाशत् सहस्रतो नैयून्यम् कोरोना प्रकरणानि। विगते अहोरात्रे द्व्यशीत्यधिक त्रिचत्वारिंशत् सहस्रसंख्याकानि नूतनप्रकरणानि पंजीकृतानि। अपरतः नवसप्तत्यधिक त्रिशतोत्तर ऊनचत्वारिंशत् सहस्रं जनाः पूर्णरूपेण आरोग्यं प्राप्य सकुशलं गृहम् उपेताः। प्रत्यावाप्तिमितिः षड् पञ्चदशमलवोत्तर त्रिनवति प्रतिशतं संवृत्ता। गत चतुर्विंशति होरासु एकत्रिंशत् सहस्राधिक-एकादश लक्ष कोरोना प्रतिदर्श परीक्षणानि अनुष्ठितानि।

॥ इति वार्ताः ॥